द्वादशः पाठः

# गान्धिनः संस्मरणम्

राष्ट्रपिता महात्मा गाँधी ने 36 वर्ष की आयु में अपने संस्मरणों को एकत्रित कर अपनी आत्मकथा मातृभाषा गुजराती में लिखी। इसके अनन्तर विश्व की अनेक भाषाओं में इसका अनुवाद किया गया। स्वयं गाँधी जी ने श्रीनिवास शास्त्री के सहयोग से इसका परिशोधन किया। गाँधी जी के अनुसार उनकी आत्मकथा आत्मपरीक्षण के रूप में है।

पण्डित होसकेरे नागप्प शास्त्री जी ने गाँधी जी की आत्मकथा को संस्कृत भाषा में **'सत्यशोधनम्'** नामक ग्रन्थ के रूप में अनूदित किया।

प्रस्तुत पाठ इसी ग्रन्थ से लिया गया है। इसमें यह वर्णित किया गया है कि बचपन में गाँधी जी किस प्रकार श्रवणकुमार की मातृ-पितृभक्ति एवं सत्यवादी राजा हरिश्चन्द्र की सत्यनिष्ठा से अभिभूत हुए।



**मम पित्रा क्रीत्वा स्थापितस्य श्रवणपितृभक्त्याख्यनाटकग्रन्थस्योपरि कथमपि मे दृष्टिरपतत्। तमेनं तत्परतयाहमपठम्। तत्कालमेव ग्रामाद्ग्रामं**

**पर्यटन्तः पुत्तलिकाप्रदर्शनोपजीविनः केचिदस्मद्ग्राममुपागमन्। तत्प्रदर्शित-पुत्तलिकासु यात्रामुद्दिश्य स्कन्धावलम्बिवीवधेन स्वमातापितरौ वहमानस्य श्रवणस्य प्रतिकृतिरेका अवलोकिता। एतत्पुस्तकं पुत्तलिका चेति द्वयं मिलित्वा श्रवणकथां मे मनसः कदाप्यप्रमार्जनीयामकरोत्। श्रवणस्य पितृभक्तिरादर्शरूपेण त्वया स्थापनीयेत्यात्मनात्मानमबोधयम्। श्रवणस्य मरणेन सन्तप्यमानयोस्तत्पित्रोर्विलापोऽद्यापि मे मनसि पुनःपुनः श्रूयते इव। मदर्थे पित्रा वितीर्णेन वाद्येन तमहमालापयम्। स रागो मे हृदयं तन्मयमकरोत्।**

**नाटकान्तरसम्बन्धिन्यपरा तत्सदृशी घटनैका संवृत्ता। एतत्कालमेव कयापि नाटकमण्डल्या प्रयुक्तं नाटकमवलोकयितुं पितुरनुज्ञाम् अध्यगच्छम्। तन्नाटकं हरिश्चन्द्रचरितात्मकमासीत्। तदेतल्लोचनासेचनकं मम मानसमकर्षत्। किन्त्वनुज्ञां कतिकृत्वः प्राप्य गन्तुं शक्येत। तथाप्येतन्निमित्तं व्यसनं नैव माममुञ्चत्। निस्संख्यवारमिदं नाटकं मया स्वयं मनसा प्रयुक्तं स्यात्। हरिश्चन्द्रेणेव सर्वैरपि कस्मात् सत्यवद्भिर्न भवितव्यम्। इत्येष प्रश्नो दिवानिशं मे मनसि पुनःपुनः अस्फुरत् सत्यानुसरणं सत्यस्यार्थे हरिश्चन्द्रवन्निर्विकल्पेन मनसा क्लेशानामनुभवः। इत्येष आदर्श एक एव मे मनस्याविरभूत्। हरिश्चन्द्रकथायामक्षरशः सत्यत्वप्रतीतिरासीत्। सर्वस्यास्य स्मरणमनेकशो मे नेत्राभ्यामश्रूणि निस्सारितानि। हरिश्चन्द्रश्रवणावुभावपि मम हृदये नित्यसंनिहितौ स्तः। अद्यापि तन्नाटकपाठेन पूर्ववन्मे हृदयं विलीयत इत्यहं जाने॥**

## शब्दार्थाः टिप्पण्यश्च

**क्रीत्वा** – खरीदी हुई।

**स्थापितस्य** – रखी हुई, सुरक्षित।

**श्रवणपितृभक्त्याख्य** – श्रवणपितृभक्ति इति आख्या यस्य तत् नाटकम्, 'श्रवणपितृभक्ति' नाम वाले।

**पर्यटन्तः** – परि + अट् + शतृ प्र.वि.ब.व., घूमते हुए।

| | | |
|---|---|---|
| **पुत्तलिका+प्रदर्शन+उपजीविनः** | – | कठपुतली का नाच दिखा कर जीविका चलाने वाले। |
| **उपागमन्** | – | उप + आङ् + गम् + लुङ् प्र.पु. ब.व., आये। |
| **स्कन्ध+अवलम्बि+वीवधेन** | – | कन्धे पर लटकी काँवड (बँहगी)। |
| **वहमानस्य** | – | वह् + शानच् षष्ठी ए. व., ढोते हुए, उठाते हुए, ले जाते हुए। |
| **प्रतिकृतिः** | – | चित्र, फोटो। |
| **अवलोकिता** | – | देखी। |
| **कदापि+अप्रमार्जनीयाम्** | – | कभी न मिटने वाली (अमिट)। |
| **स्थापनीया + इति + आत्मना + आत्मानम् अबोधयम्** | – | स्थापित करना चाहिये ऐसा स्वयं को स्वयं से ही समझाया। |
| **सन्तप्यमानयोः** | – | सम् + तप् धातु कर्मवाच्य + शानच्, तड़पते हुए (का) षष्ठी द्वि.व. दुखी होते हुए (का)। |
| **तत्पित्रोः+विलापः+अद्यापि** | – | उसके माता-पिता का रोदन आज भी |
| **वितीर्णया** | – | प्रदत्तया, दी गई। |
| **आलापयम्** | – | (आङ् + लप् णिच् + उ.पु. ए.व.), गाया। |
| **अनुज्ञाम्** | – | आज्ञा को (अनु + ज्ञा + अङ् टाप् द्वि. ए.व.)। |
| **अध्यगच्छम्** | – | प्राप्त किया। |
| **तत्+एतत्+लोचन+आसेचनकम्** | – | आँखों को शीतल करने वाले ऐसे उस नाटक को, नेत्रानन्ददायक उस नाटक को। |
| **अकर्षत्** | – | आकृष्ट किया। |
| **कतिकृत्वः** | – | कति + कृत्वस् अव्यय, कितनी बार। |
| **गन्तुं शक्येत** | – | शक् + कर्मवाच्य + विधि प्र.पु.ए.व., जाया जा सकता है। |
| **व्यसनम्** | – | लगन, आसक्ति। |
| **निस्संख्यवारम्** | – | अनेक बार, बहुत बार। |
| **दिवानिशम्** | – | दिवा च निशा च, तयोः समाहारः, द्वन्द्वसमासः, दिन-रात। |

**पुन:पुनः अस्फुरत्** – स्फुर् + लङ् (प्र.पु. ए.व.) बार–बार उभरता हुआ।
**हरिश्चन्द्रवत् निर्विकल्पेन** – हरिश्चन्द्र के समान सच्चे (सत्यनिष्ठ)।
**मनसि + आविरभूत्** – मन में प्रकट हुआ।
**निस्सारितानि** – बहाये हैं।
**विलीयते** – लीन हो रहा है।

## अभ्यासः

1. **संस्कृतेन उत्तरं दीयताम्**

(क) प्रस्तुतः पाठः कस्माद् ग्रन्थात् सङ्कलितः?
(ख) गान्धिनः आत्मकथा मूलतः कस्यां भाषायां लिखिता ?
(ग) गान्धिनः आत्मकथायाः संस्कृतभाषायाम् अनुवादकः कः?
(घ) महात्मा गाँधी किन्नाम नाटकम् अपठत् ?
(ङ) गान्धिनः ग्रामं के उपागच्छन्?
(च) गान्धिनः मनसि कयोः विलापः पुनः पुनः श्रूयते स्म?
(छ) महात्मा गान्धी हरिश्चन्द्रनाटकं द्रष्टुं कस्य अनुज्ञाम् अध्यगच्छत्?
(ज) कस्य कथायां सत्यत्वप्रतीतिः आसीत्?
(झ) कौ गान्धिनः हृदये नित्यसन्निहितौ आस्ताम्?
(ञ) कीदृशस्य श्रवणस्य प्रतिकृतिः गान्धिना अवलोकिता?
(ट) गान्धिनः मनसा किं प्रयुक्तम् आसीत्?
(ठ) कः प्रश्नः गान्धिनः मनसि पुनः पुनः स्फुरति स्म?

2. **रिक्त स्थानानि पूरयत**

(क) ग्रामात् ग्रामं .................................. पुत्तलिकाप्रदर्शनोपजीविनः उपागच्छन्?
(ख) श्रवणस्य पितृभक्तिः ..................... त्वया स्थापनीया।
(ग) स रागः मे ..................... तन्मयमकरोत्।
(घ) अनेकशः मे नेत्राभ्याम् ..................... विस्सारितानि।
(ङ) हरिश्चन्द्रश्रवणौ ..................... मम हृदये नित्यसन्निहितौ।

3. **अधोलिखितेषु यथानिर्देशं पदचयनादिकं कुरुत**

(क) अस्मात् पाठात् अव्ययपदानि चिनुत।
(ख) एतेषां शब्दानां संस्कृतवाक्ये प्रयोगं कुरुत
पर्यटनम्, उद्दिश्य, संवृत्ता, प्राप्य, भवितव्यम्
(ग) अस्मिन् पाठे कर्मवाच्ये प्रयुक्तानि क्रियापदानि चिनुत।
(घ) अधोलिखितशब्दानां समानार्थकं शब्दं लिखत
लोचनम्, पितरौ, मनः

**4. अधोलिखितपदेषु सन्धिं सन्धिविच्छेदं वा कुरुत**

(क) दृष्टिरपतत् = ...................... + ......................
(ख) ग्रामात् + ग्रामम् = ......................................................
(ग) कदा + अपि + अप्रमार्जनीयाम् = ......................................................
(घ) घटनैका = ...................... + ......................
(ङ) तत् + नाटकम् = ......................................................
(च) इत्येष = ...................... + ......................
(छ) मनसि + आविरभूत् = ......................................................

**5. हिन्दीभाषया आशयं स्पष्टीकुरुत**

(क) सत्यानुसरणं सत्यस्यार्थे हरिश्चन्द्रवन्निर्विकल्पेन मनसा क्लेशानामनुभवः।
(ख) निस्संख्यवारमिदं नाटकं मया स्वयं मनसा प्रयुक्तं स्यात्।
(ग) श्रवणस्य पितृभक्तिरादर्शरूपेण त्वया स्थापनीयेत्यात्मनात्मानमबोधयम्।

## योग्यताविस्तारः

गान्धिनः संस्मरणम् इति पाठम् अनुसृत्य मातृभक्तेः पितृभक्तेः एवं सत्यनिष्ठायाः भावं दृढीकरणाय इमे श्लोकाः प्रस्तूयन्ते।

1. **मातृमान् पितृमान् आचार्यवान् पुरुषो वेद।** (*शतपथब्राह्मणात्*)

2. **उपाध्यायान् दशाचार्यः**
**आचार्याणां शतं पिता।**
**सहस्रं तु पितॄन् माता**
**गौरवेणातिरिच्यते॥** (*मनुस्मृतेः*)

3. **मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव।** (*उपनिषदः*)

4. **माता गुरुतरा भूमेः पितोच्चतरस्तथा खात्।** (*महाभारतात्*)

5. **सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः।**
**सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्॥** (*रामायणात्*)

6. **भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि।**
**सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः॥** (*रामायणात्*)

7. **बलं सर्वबलेभ्योऽपि सत्यमेवातिरिच्यते।**
**सत्यवानबलः श्रेयान् सबलात् सत्यवर्जितात्॥** (*रामायणात्*)